# श्रीहनुमत्कल्पः

। देव्युवाच ।

शैवादिगाणपत्यादिशाक्तानि वैष्णवानि च ।

साधनानि च सौराणि चान्यानि यानि कानि च ॥ १॥

एतानि देवदेवेश त्वदुक्तानि श्रुतानि च ।

किञ्चिदन्यच्च देवानां साधनं यदि कथ्यताम् ॥ २॥

शङ्कर उवाच ।

शृणु देवि प्रवक्ष्यामि सावधानावधारय ।

हनुमत्साधनं पुण्यं महापातकनाशनम् ॥ ३॥

एतद् गुह्यतमं लोके शीघ्रसिद्धिकरं परम् ।

जपो यस्य प्रसादेन लोकत्रयजितो भवेत् ॥ ४॥

तत्साधनविधिं वक्ष्ये नृणां सिद्धिकरं मतम् ।

हुङ्कारमादौ सम्प्रोक्तं हनुमते तदनन्तरम् ।

रुद्रात्मकाय हुं चैव फडिति द्वादशाक्षरम् ॥ ५॥

हुं हनुमते रुद्रात्मकाय हुं फट् ॥

एतन्मन्त्रं समाख्यातं गोपनीयं प्रयत्नतः ।

तव स्नेहेन भक्त्या च ददामि तव सुन्दरि ॥ ६॥

एतन्मन्त्रमर्जुनाय पुरा दत्तं तु शौरिणा ।

जपेन साधनं कृत्वा जितं सर्वँ चराचरम् ॥ ७॥

नदीकूले विष्णुगेहे निर्जने पर्वते वने ।

एकाग्रचित्तमाधाय साधयेत् साधनं महत् ॥ ८॥

ध्यानं ।

महाशैलं समुत्पाट्य धावन्तं रावणं प्रति ।

तिष्ठ तिष्ठ रणे दुष्ट मम जीवन्न मोक्ष्यसे ॥ ९॥

इति ब्रुवन्तं कोपेन क्रोधरक्तमुखाम्बुजम् ।

भोगीन्द्राभं स्वलाङ्गूलमुत्क्षिपन्तं मुहुर्मुहुः ॥ १०॥

लाक्षारक्तारुणं रौद्रं कालान्तकयमोपमम् ।
ज्वलदग्निसमं नेत्रं सूर्यकोटिसमप्रभम् ॥ ११॥

अङ्गदाद्यैर्महावीरैर्वेष्टितं रुद्ररूपिणाम् ।
एवं रूपं हनूमन्तं ध्यात्वा यः प्रजपेन्मनुम् ॥ १२॥

लक्षजापात्प्रसन्नः स्यात् सत्यं ते कथितं मया ।
ध्यानैकमाश्रितानां च सिद्धिरेव न संशयः ॥ १३॥

प्रातः स्नात्वा नदीतीर उपविश्य कुशासने ।
प्राणायामं षडङ्गं च मूलेन सकलं चरेत् ॥ १४॥

पुष्पाञ्जल्यष्टकं दत्त्वा ध्यात्वा रामं ससीतकम् ।
ताम्रपात्रे ततः पद्ममष्टपत्रं सकेसरम् ॥ १५॥

रक्तचन्दनघृष्टेन लिखेत्तस्य शलाकया ।
कर्णिकायां लिखेन्मन्त्रं तत्रावाह्य कपिं प्रभुम् ॥ १६॥

कर्णिकायां यजेद्देवं दत्त्वा पाद्यादिकं ततः ।
गन्धपुष्पादिकं चैव निवेद्य मूलमन्त्रतः ॥ १७॥

सुग्रीवं लक्ष्मणं चैव अङ्गदं नलनीलकम् ।
जाम्बवन्तं च कुमुदं केसरिणं दले दले ॥ १८॥

पूर्वादिक्रमतो देवि पूजयेद् गन्धचन्दनैः ।
पवनं चाञ्जनीं चैव पूजयेद् दक्षवामतः ॥ १९॥

दलाग्रेषु क्रमात्पूज्या लोकपालास्ततः परम् ।
ध्यात्वा जपेन्मन्त्रराजं लक्षं यावच्च साधकः ॥ २०॥

लक्षान्ते दिवसं प्राप्य कुर्याच्च पूजनं महत् ।
एकाग्रमनसा धीमांस्तस्मिन् पवननन्दने ॥ २१॥

दिवारात्रौ जपं कुर्याद् यावत्सन्दर्शनं भवेत् ।

सुदृढं साधकं मत्वा निशीथे पवनात्मजः ॥ २२॥

सुप्रसन्नस्ततो भूत्वा प्रयाति साधकाग्रतः ।
यथेप्सितं वरं दत्त्वा साधकाय कपिप्रभुः ॥ २३॥

सर्वसौख्यमवापोन्ति विहरेदात्मनः सुखैः ।
एतच्च साधनं पुण्यं देवानामपि दुर्लभम् ।
तव स्नेहात् समाख्यातं भक्तासि यदि पार्वति ॥ २४॥

वीरसाधनम् ।
हनुमतोऽतिगुह्यं च लिख्यते वीरसाधनम् ।
बाह्ये मुहुर्त उत्थाय कृतनित्यक्रियो द्विजः ॥ २५॥

गत्वा नदीं ततः स्नात्वा तीर्थमावाह्य त्वष्टधा ।
मूलमन्त्रं ततो जप्त्वा संसिक्तो नित्यसङ्ख्यया ॥ २६॥

ततो वासः परीधाय गङ्गातीरेऽथवा शुचौ ।
उपविश्य ।
ॐ अङ्गुष्ठाभ्यां नमः ।
ॐ हृदयाय नम इत्यादिना च कराङ्गन्यासौ कुर्यात् ।

करन्यासः -
ॐ ह्रां अङ्गुष्ठाभ्यां नमः ।
ॐ ह्रीं तर्जनीभ्यां नमः ।
ॐ ह्रूं मध्यमाभ्यां नमः ।
ॐ ह्रैं अनामिकाभ्यां नमः ।
ॐ ह्रौं कनिष्ठिकाभ्यां नमः ।
ॐ ह्रः करतलकरपृष्ठाभ्यां नमः ।

अङ्गन्यासः -
ॐ ह्रां हृदयाय नमः ।
ॐ ह्रीं शिरसे स्वाहा ।
ॐ ह्रूं शिखायै वषट् ।
ॐ ह्रैं कवचाय हुं ।
ॐ ह्रौं नेत्रत्रयाय वौषट् ।
ॐ ह्रः अस्त्राय फट् ।

प्राणायामः ।

अकारादिवर्णानुच्चरन्वामनासापुटेन वायुं पूरयेत् ।

पञ्चवर्गानुच्चरत्कुम्भयेत्, यकाराद्येन रेचयेत् ॥

एवं वारत्रयं कृत्वा मन्त्रवर्णैरङ्गन्यास कुर्यात् ।

ध्यानम् ।

ध्यायेद्गणे हनूमन्तं कपिकोटिसमन्वितम् ।

धावन्तं रावणं जेतुं दृष्ट्वा सत्वरमागतम् ॥ २७॥

लक्ष्मणं च महावीरं पतितं रणभूतले ।

गुरुं च क्रोधमुत्पाद्य गृहीत्वा गुरुपर्वतम् ॥ २८॥

हाहाकारैः सदण्डैश्च कम्पयन्तं जगत्त्रयम् ।

आब्रह्माण्डसमप्रस्थं कृत्वा भीमं कलेवरम् ॥ २९॥

मन्त्रः ।

श्रीबीजं पूर्वमुच्चार्य पवनं च ततो वदेत् ।

नन्दनं च ततो देयं ङेऽवसानेऽनलप्रिया ॥

श्रीपवननन्दनाय स्वाहा ॥ ३०॥

दशार्णोऽयं मनुः प्रोक्तो नराणां सुरपादपः ।

सप्तदिवसं महाभयं दत्त्वा त्रिभागशेषासु निशासुनियतमागच्छति ।

यदि साधको मायां तरति ईप्सितं वरं प्राप्नोति ॥

विद्या वापि धनं वापि राज्यं वा शत्रुनिग्रहम् ।

तत्क्षणादेव प्राप्नोति सत्यं सत्यं सुनिश्चितम् ॥ ३१॥

॥ इति तन्त्रसारोक्त श्रीहनुमत्कल्पः समाप्तः ॥